5-2

# मूलप्रवेशिका ।

श्रीयुत्घनश्यामात्मजेन निर्मिता
सैव
हरिनाथोपनामक राघवेन्द्रसरस्वती
शास्त्रिभिः संशोधिता ।



काश्याम्
चौखम्बासंस्कृत पुस्तकालयाध्यक्ष बाबू हरिदास द्वारा
पण्डित नान्हूरामगोस्वामि गिरिधारि लाल
भ्यां मुद्रयित्वा प्रकाशिता ।

—:-०-:—

विद्याविलास प्रेस बनारस ।

श्रीगणेशाय नमः ।

मुनित्रयमस्य व्याख्यानमाह ॥ १ ॥ मन्तारोमुनयः सर्ववेदशास्त्रार्थं तत्त्वाऽवगन्तार इत्यर्थः ॥ त्रयोऽवयवायस्य तत् त्रयं-मुनीनां त्रयं मुनित्रयं त्र यशब्दस्य समुदाय वाचकत्वात् गुणवाचित्वाऽभावेन पूरणगुणेति निषेधोननमस्करणं नमस्कृत्यतेषामुक्तयस्तदुक्तय स्तास्तदुक्तीः । तच्छब्दस्यपूर्वपरामर्शकत्वात् बुद्धिस्थ परामर्शकत्वाच्च मुनित्रयोक्तीः प्राचीनोक्ती वेत्यर्थः ॥ परिभावनं परिभाव्य, विचारयतिरस्कृत्येत्यर्थो वाधात् नामनेकार्थत्वात् । अतएवपरौ भुवोऽमज्ञाने इति सूत्रेऽवज्ञानेग्रहणंसार्थकम् यतु अनादरपरिभवपरी भावस्तिरस्कियेतिकोशात् परिपूर्वकस्य भूधातोस्तिरस्कारार्थत्वादपि विचारार्थ कत्वेन किञ्चिद् वाधकमिति तन्न । कोशस्य लिङ्गानुशासनत्वेन धात्वर्थ प्रतिपादकत्वाभावात् । अन्यतरपाठस्य वैय्यर्थ्या पत्तेश्चव्याक्रियन्ते व्युत्पाद्यन्ते, अनेनेतिव्याकरणम् व्याकरण मधीयते विदन्तिवेति वैयाकरणाः । असेधीतिसिद्धः । अन्ततीति अन्तः सिद्धो निष्पन्न, अन्तोनिश्चयः । सिद्धो ऽन्तोएषामिति सिद्धान्ता वैयाकरणानाम् । सिद्धान्ताः । वैयाकरण सिद्धान्ताः । कौमोदते इति कुमुदः । अन्तर्भावितण्यर्थो ऽत्रमुदेः । कुमुदचन्द्रस्तस्येयं कौमुदी । साकौमुदी लौकिक पदार्थ प्रकाशिका । अयं च ग्रन्थो वैयाकरणपदार्थ प्रकाशक इति सादृश्यादत्रापिकौमुदीशब्दप्रयोगः । इयमित्यस्यमद्बुद्धि विषयेत्यर्थः । वीतिभिन्नम्पदम् । विरच्यते, इत्यस्य पठनपाठनपुस्तकशम्पादनद्वारा प्रकाश्यते । एवं च मुनित्रयम्, नमस्कृत्य च पुनस्तदुक्तीः परिभाव्य मुनित्रयोक्तीवि चार्य्य सूत्रवार्तिक भाष्याणिविविच्य, अथ वा प्राचीनोक्तीः

परिभाव्यतिरस्कृत्य इयं मद्बुद्धिविषयावैयाकरणसिद्धान्तकौमुदी मयाविरच्यते। मुनित्रयं नमस्कृत्येत्यनेन मङ्गलमाचरितंशिष्टाचारानुरोधात् तदुक्तीः परिभाव्यचेत्यनेन स्वग्रन्थस्यसमूलत्वं प्राचीन ग्रन्थैरगता र्थत्वं च ध्वनितम् । श्लोकस्योत्तरार्द्धभागेनानुवन्ध चतुष्टयत्वं चदर्शितम्। अनु बन्धचतुष्टयत्वं च । प्रवृत्तिप्रयोजकज्ञानजनक ज्ञानविषयत्वम्। प्रवृत्तिप्रयो जकज्ञानत्वं च । कृतिसाध्यत्वेसति इष्टसाधकत्वं विषयः प्रयोजनः सम्बन्धाधिकारीति । अनु वन्ध च तुर्ष्टयोपादानेनस्व ग्रन्थस्य पठनपाठन विषयाऽभिलाषावत्वं च सूचितम्। सकलशास्त्रार्थ वेत्तारोभट्टाः। भट्टपरिभाषणेइत्यस्मात्, औणादिकेत्तनिष्टुत्वे च सिद्धम्। भट्टानुनामावितर्केणशास्त्र विचारेणजयति, इति भट्टोजिः किञ्चिच्चा उभयत्रतुग्गुणाऽभावस्तु आनिलोडित्यत्राका रोच्चारणमूलकेना ऽगमशास्त्रस्यानित्यत्वेन ओर्गुण इत्यत्र ओरोदिति वक्तव्ये गुणग्रहण सामर्थ्यात् संज्ञापूर्वको विधिरानित्यति ज्ञापनार्थे न सिद्धं गुरोस्सका शान्मंत्रोपदेश नन्दीक्षासाजातायस्येति दीक्षितः भट्टोजिश्चासोदीक्षितश्च भट्टोजि दीक्षितः ॥ १ ॥ प्रत्याहार सूत्राण्याह अइ उोत्यादि एषुसूत्रेषु वाहुलकात् कारप्रत्थयोन ननु अइउणिन्यादि पदंवा अपदम् यदिपदस्यात्तदाविभक्तिः कुत्रगता यदि चापदंस्यात्तदा अपदं न प्रयुञ्जित इति भाष्यविरोधस्यात् तदा किं कर्तमित्याह । अर्थ वद्धातुरप्रत्ययः प्रातिपदि कमित्यनेनाऽकारादीनां प्राति पदि कसंज्ञाततश्च स्वाद्युत्पत्तिः । तस्यसुपांसुलुगित्यनेन लुकापहाराव नश्रवणमिति भावः यद्वाऽपदमेवतदापि न दोषः इति भूधात्वोपारिवक्ष्यामः ननु एषु सन्धिक स्मान्नभवति इति चेन्न कुतः वाक्येसंहिताया अभावात् यतु चादयोसत्वे इत्यनेन निपातसंज्ञानिपात एका जनाङित्यने न प्रगृह्य

संज्ञात्वान्नदोषः तन्न एषामर्थवत्वे निपातसंज्ञाया अभावात् । यत्तुजन्य जनकभावात्सन्धिर्न तदपिन रातेभ्यः पूर्वमपिसन्धि-दर्शनात् लण्णकारो व्याख्यानतोविशेष प्रतिपत्ति इति परिभाषा-ज्ञापनार्थं ञमङणनम् इत्यत्रमकारपुरायपाठार्थं पदान्तेह्यकारभका-राभावात् ङमोह्रस्वादचि इत्यनेनेति भाव । ननुऋलृ वर्णयोः प्र-त्यकंत्रिंशतः सज्ञासिद्धये । अणुदित्सवर्णस्य इति सूत्रे अणग्रह-णस्य जातिपक्षेप्यावश्यकत्वादिति चेत् अत्राहु ऋलृवर्णयोसा-वरार्यस्यानित्यतां ज्ञापयन्तुमुभयो रुपदेशः तत्फलन्तुकृप्ताशिखाय-स्पसः क्लृप्तशिखः तस्य द्वरात्संबोधनेहेक्लृ३प्तशिखेति प्लुतः अनृत इति पर्युदासावदृकारस्यैव लृकारस्यापि प्लुतोन स्यात् इति चेन्न गुरोरनृत इत्यत्रर वत्त इति पठित्वा तत्ररेफवतऋकारस्यैव प्लु-तनिषेधः । नतु लृकार वत्तोनिषेधः । तर्हिहोतृकार इत्यत्रदीर्घऋ-कारस्यापि निषेधस्यात् । सिधान्तेतुतपरकरणात्दीर्घऋकारस्यन स्यात् नचह्रस्वाद्रवत् इति पठितव्यम् इति वाच्यम् । महतो व-शेनलदूवा वन्धनवत् गौरवात् । हयवरट्हकारोपदेशः अट् अश्-हश् इण् ग्रहणे धुहकारग्रहणार्थः अर्ह्रेण अड्व्यवायेपि इति णत्वम् देवाहसन्ति भोभगोरिति रोर्यत्वम् देवोह सन्ति हशिचेत्युत्वम् लि-लिहिढे लिलिहिध्वे विभाषेट इति वादः हलइदं सूत्रं वलूरलू झल-शलूषु हकारग्रह णार्थम् रुदिहि स्वपिहि रूदादिभ्यः सार्वधा-तुक इति वलादिलक्षण इट स्निहित्वा स्नेहित्वा । रलोन्युपधादिति वा कित्वम् अदाग्धाम् झलोझलीतिसकारलोपः अलिक्षत् शल इ-गुपधा दितिक्सः । ननु पुनर्हकारोपदेशस्य आवश्यकत्वे पि श-र्मध्यरा वहकारंपठित्वा ॥

अलोन्त्यस्ये त्यादिसूत्राणि यावान्तिला नु वन्धानि तिष्ठ-न्तितानि रकारानुबन्धानिपठित्वा, हल इति पृथक् सूत्रन्त्यज्यता-

म् । हरन्त्यमित्यत्रान्योन्या श्रयपरिहारस्तुरन्त्यहरितिन्यासेनाव्र-
त्याहरप्रत्याहारबोधक सूत्रसमुदायास्यान्त्यमित्यर्थेन वासुकर इति
भावः । इति चेत्, मैवम् तथाहि सतिहरिर्हसति, इत्यादिनासि-
ध्येत् खर बसानयो र्वाशारि । इत्यादि प्रसङ्गात् इति चेत् न प्रे-
व्यब्रुवोर्हविषो इत्यादिनिर्देशेन हकारेपरे खवसान योर्वाशारे इ-
त्यादि न स्यादिति स्वीकारात् । ननु एवं स्वीकारेऽपिपरञ्च-
प्राङ्हसति, इत्यत्रङ्णोकुक्टुक्शरि, इत्यनेन कुक्स्यात् । न च
एङ्हस्वादितिनिर्देशेन हकारे परेकुक्नस्यादिति वाच्यम् । पाक्षि-
क प्रयोगोयमितिस्त्रीकारात् । अतः प्राङ्हसति, इत्यत्रैवदूषणमि-
तिस्वीकारात्, हल इति सूत्रंकर्त्तव्यमेव न न्वस्याम्पाणिन्युक्ता-
यां चतुर्दशसूत्र्यामक्षरस माम्नायामाम्नय इति व्यवहारानुपपत्तिरा-
म्नायसमाम्नायशब्दयोर्वेदेविदित्वात्, अत आह इति माहेश्वराणी-
ति । महेश्वरादागतानि माहेश्वराणिनत्तुमहेश्वरेणप्रोक्तानि एवं म-
हेश्वर प्रसादात् पाणिनिनामन्त्र वल्ब्धानि अत एवानु पूर्विक
श्रुतिरेवैषा । वृत्ति–समवायार्थो वर्णानामुपदेश इति भाष्यव्या-
ख्या वसरेसचाणादि प्रत्याहारद्वाराशास्त्र प्रवृत्त्यर्थ इत्यनेन दृष्ट प्र-
योजनमप्युक्तं तदेतदाह अणादि संज्ञार्थानि । इति ॥ १ ॥ अण्
आदिर्यासान्ता अणादयः अणादयश्चताः संज्ञाश्चाणादिसंज्ञा ।
अणादिसंज्ञा एवर्थ प्रयोजनयेषान्तानि, अणादिसंज्ञार्थानि, इति ।
तत्र अनुबन्धकरणार्थश्चवर्णानामुपदेशः । इति च । वृद्धिरादैच्च
इति सूत्रभाष्य च । एतदेकमाचार्यस्य मृष्यतां माङ्गलिक आ-
चार्यमंगलार्थं वृद्धिशब्दमादितः । प्रयुंक्ते, इति अन्यथा उद्देश-
स्य पूर्ववचनं भिधेयस्य तत्परं स्यादिति भावः । कथं चाणादि
संज्ञा, इत्यत आह । एषामिति । एषां पूर्षोक्त सूत्राणाम-
न्त्येभवायेवर्णास्तेहलन्त्यमिति वक्ष्यमाणसूत्रेणेत्संज्ञाः स्युरित्यर्थः ।

लण् सूत्रेति । पूर्ववाक्यादित्यदानुभवाय भुक्त वंत्रं प्रति माभुङ्क्था इति वत् वैयर्थ्या भावाय च, हकारादिष्विसस्तः प्राक् अनन्त्या-र्था प्रथगुक्तिः, ननु हयवरडित्यादि सूत्रेषु पुनः पुनरकारोच्चा-रणेन तस्यहलत्वप्रसङ्गः स्यात् । तथा च राम इत्यादौ हलङ्या-ब्भ्योदीर्घात्सुतिस्य पृक्तं हल इति सूत्रेण सोर्लोपः स्यात् अत आह । हकारादिष्वकार उच्चारणार्थं इति. उच्चारणमेवप्रयोजन यस्यस उच्चारणार्थं इत्यर्थः । अत एव न पुनर न्तरणा च व्यंजनस्यो च्चारणमपि संभवतीति उच्चै रुदातसूत्रे भाष्ये उ-क्तम् । अचं विना व्यंजनस्यो च्चारणमपि न संभवतीति भा-ष्यार्थः। ननूच्चरणमर्थं कृतस्याऽप्य कारस्य प्रत्याहारे ग्रहणं स्यात् । नहि घटायोन्मीलितं चक्षुः पटं न हि पश्यतीति चेन्नैवम् । एषाह्या चार्यस्य शैली लक्ष्यते यस्तुल्य जातीयाँ स्तन् तुल्यजातीयेषु उ-पदिशति अचोऽक्षु हलोहल्षु इति प्रत्याहाराऽनुवन्धानामित्यत्र भाष्यात् । आचार्यस्य पाणिनेः एषाशैली समाधानपूर्विका प्रवृत्ति-र्दृश्यते यत्त यस्मात् । तुल्य जातियान् तुल्यजातियेषु उपदिशति । इति । हलन्त्यम् ॥ हलोऽन्त्यमिति षष्ठी समासो बोध्यः । नच हलि अन्त्यमिति सप्तमीति योगविभागात्समास इति वाच्यम् ॥ तस्य भाष्ये ऽदर्शनात् ॥ नच सहसुपेति समास इति वाच्यम् तस्या-ऽगतिकत्वात् ॥ हलन्त्यमित्यत्र हलपदस्य प्रविष्टत्वात् आ-दिरन्त्येनेत्यत्रेत्पदस्य प्रविष्टत्त्वात् इत्पदार्थ प्रसिद्ध्युत्तरं ह-ल्पदार्थप्रसिद्धिः । हल्पदार्थप्रसिद्ध्युत्तरं इत्पदार्थ प्रसिद्धि रित्यन्योन्याश्रयमाशङ्क्य आवृत्त्यात्तम्परिहरति ॥ अत एव न विभक्तौतुस्मा इति संगच्छते ॥ अन्यथा सूत्रमसंगतं स्या-त् ॥ नच हलित्येकदेशस्यैव तन्त्रं मत्वासामिप्य षष्ठ्यर्थं च मत्त्वा ॥ हस्यल इति व्याख्याय । हकारसमियो यः लकारस इ-

रसंज्ञकस्यादिति प्रथमवाक्यार्थः ॥ उपदेशेविद्यमानं मन्त्यंहल इ-
त्संज्ञकस्स्यादिति द्वितीयवाक्यार्थ इति वाच्यम् ॥ यद्यपीदृशे वि-
षये उच्चारयितु स्तन्त्रैकशेषान्यतरेणोच्चारणं वोद्धुस्त्वावृत्त्यावोध
इत्येवानुभवसिद्धत्त्वात् ॥ एवमेकशेषेपि पूर्वत्समाधानं वोध्यं क-
थितं चास्माभिः ॥ नच बोद्धुज्ञानाय हल इत्येकदेशस्यैवा वृत्ति-
स्सामिप्य षष्ठ्यर्थं च मत्वा हस्यल इति व्याख्याय हकारसमियो
यो लकारवस इत्संज्ञक उपदेशेविद्यमानमन्त्यं हल प्रत्याहारवोध्य-
वर्ण इत्संज्ञकस्यादिति वाच्यम् ॥ नहि ब्राह्मणस्य कम्वल इत्यादौ
ब्राह्मणसमीपवर्त्ती अन्यदीयः कम्वल प्रतीयते ॥ अत एवानन्त-
रादिषु न समासोऽन भिधानादिति भाष्यमपि संगच्छते ॥ नच
वोद्धुः ज्ञानाय हल् चल् चेति द्वन्द्वं कृत्वा लकारस्य संयोगान्त-
लोप हल् प्रत्याहारसिद्धौ किम् समग्रसूत्रावृतिकरणे नेति वाच्यम् ॥
यण् प्रतिषेधारम्भात् तत्प्रत्याख्यान पक्षे ऽपि संयोगान्तरलोप-
विधानाच्च ॥ अतस्समग्रसूत्रावृत्त्यैव श्रेष्ठा । इति दीक्षित्तमतम् ।
वयम् इति ब्रूमः । हल्ङ्याब्भ्यो दीर्घात्सुतिस्य पृक्त हलितिसूत्रे
हल् ग्रहणेन उपदेशेविद्यमानस्यान्तलकारस्येत्संज्ञा बोधनेन सुलभः।
स्पष्ट चेदमत्रैवभाष्ये तत्राह सूत्रे हल् ग्रहणं किम् । विभेद् । णल्
लकार स्येत्त्वाऽभावेन अपृक्तत्त्वाऽभावात्तद् वैयर्थ्यं स्पष्ट मेव ॥
स्पष्टं चेदं सर्वं हलन्त्यमिति सूत्रे भाष्ये ॥ अन्यथा सूत्रावृत्त्यापे-
क्षया लाघवात् व्यञ्जनमन्त्यमित्यव वदेत् ॥ किं च अक्षर समा-
म्नाये हलिति सूत्रे हल् इत्यवस्थायां आद्गुणेति गुणे कृते हलि-
तिनिष्पन्नस्य ग्रहणम् । तत्र लकारो ऽननासिक उपदेशेऽजनुना-
रिक इति प्रवर्तते ॥ १ ॥ आदिरन्त्येनेति । आद्यन्त शब्दावत्रा
वयववाचिनौ ताभ्यां तद्घटित समुदायो ऽवयवी आक्षिप्यते ।
परस्मिन्सति यस्मात् पूर्वोनास्ति स आदिः । पूर्वस्मिन् सति य-

स्मात्परोनास्ति स अन्त्य । एवं च अन्तेनेतासह आदिः स्वघटित मध्यगानां संज्ञास्यादित्यर्थः । स्वेति स्वंस्वरूपमित्यनुवृत्त्यालाभः ॥२॥ इति हलसंज्ञायामिति ॥ आभ्यां सूत्राभ्यां हलमात्रसंज्ञायां सिद्धायामित्यर्थः । सप्तम्यन्तपाठ इतरसंज्ञांसूचयति इति भावः ॥ हलन्त्यामिति ॥ द्विपदमिदं सूत्रम् ॥ सति समासे ऽन्त्यशब्दस्य पूर्वनिपातापत्ते ॥ कर्म्म धारययोग्यपदानां समासाऽभावस्य सूत्रकारशैलिसिद्धत्वाच्च ॥ इति ॥ सूत्रार्थमाह । उपदेशेऽजिति सूत्राद् उपदेशे इच्चेति पदद्वयमनुवर्तते । अध्याहरित विद्यमानं क्रियां निरूपित मुपदेशे इत्यस्याधिकरणत्वम् ॥ एवं च उपदेशेविद्यमान मन्त्यंहल्प्रत्याहारबोध्यवर्णमित्संज्ञंस्यादित्यर्थः । अथवा उपदेशेविद्यमानमन्त्यंहल् इत्स्यादित्यर्थः ॥ ततोऽणजिति ॥ अत्रापिसप्तम्यन्त पाठउपदेशजितिवाक्यार्थं सूचयति ॥ उपदे शेऽजिति । अत्रापि विद्यमानमित्यस्याध्यारः ॥ एवं च उपदेशेविद्यमानोऽनुनासिको ऽजित्संज्ञस्स्याद् ॥ उपदेशग्रहणमु तरार्थम् ॥ नचा भ्रआङअपः । इत्यत्रलोपस्स्यादितिवाच्यम् ॥ अनुनासिकविधानसामर्थ्याद् ॥ अत उतरार्थमित्युक्तम् ॥ यद्यप्यत्रोपजीव्यत्वाद नुनासिकसंज्ञाप्रथमं वक्तुमुचिता तथापि नासिकामनुगत इति योगाश्रयणेनैवगतार्थत्वादनुनासिकसंज्ञासूत्रं मन्दप्रयोजनमि तिध्वनयितुनेहोपन्यस्तम् ॥ ननु शास्त्रे ऽनुनासिकोच्चारणाभावा त्तत्त्वज्ञानन्दुलभमत आह प्रतिज्ञेति ॥ प्रतिज्ञायत इति ज्ञा अनुनासिकस्य भाव अनुनासिक्यम् प्रतिज्ञाऽनुनासिक्यंयेषां पाणिनिप्रभृतिप्रोक्ताः वर्णास्ते प्रतिज्ञाविषया ऽनुनासिक्यवन्त इत्यर्थः ॥ प्रतिज्ञाचायमेव इति कथनम् । वर्णानान्तत्वज्ञापकेन दितौनुमित्यादि व्यवहारश्चेत्यत स्ताभ्याम नुनासिकत्वज्ञानं सुलभमिति भावः ॥ ननु कृष्णर्द्धिरित्यत्र उरणरपर इत्यनेन रपरसत्वेऽपित वर्कार इत्य-

ऋलपरत्वंनस्यादत आह लण्सूत्रस्थेति । लण्सूत्रस्थ अवर्णसदृ-
शोऽवर्णेन सहोच्चार्य माणोयोरेफसरलपोस्सञ्ज्ञा इत्यर्थः । तेनर-
प्रत्याहार सिद्धिरिति भावः । तत्र मानमाह ॥ तुल्यास्य प्र-
यत्नं सवर्णमिति सूत्रेभाष्येलपरश्चे तिवक्ष्यामीत्युक्तम् । तस्या-
ग्रेदर्शनाऽभावात् नकेनाप्याशयंलब्धम्' ॥ तस्मात्कैयटेन लपर-
श्चेतिव्या ख्यास्यामीति व्याख्यानंकृतम् । अतः दीक्षितस्यकैय
टानुयायित्वेन तत्प्रकारमत्राप्याह । प्रत्याहारस्तु आदिरन्त्येनेत्य-
नेनेति भावः ॥ ननुर प्रत्याहारवदन्य प्रत्याहारो स्तुतथाच ङेरय
इत्यत्रयकरादेशेन यवरलानांबोधोभ वेदितिचेन्न कुतः इकोयणचि
इति सूत्रेयकारेणैवय वरलानांबोधोभवत्येवपुन स्तस्मिन्सूत्रे णका-
रग्रहण किं मर्थं तदेवन्यर्थं व्यर्थं सजज्ञापयति रप्रत्याहारातून्य-
तिरिक्त अन्यप्रत्याहारोन ॥ न च रात्सस्येति सूत्रेर कारग्रहणेन
लकारस्यापि ग्रहणं भवति तथा च फुल् इत्यत्र लकारस्य लोपो-
न स्यादितिवाच्यम् । अतोल्लारान्तस्येति सूत्रेसकारोच्चारणसा-
मर्थ्यात् रप्रत्याहारोऽनित्येत्तिस्वीकारात् । इति प्राञ्चः ॥ नव्या
स्तु । अतोल्लरान्तस्येतिसूत्रे लकारग्रहणेन रप्रत्याहारोन अन्यच्च ।
रप्रत्याहारेतु । मामाङ्न्त्रायसे इत्यत्रापि अनुस्वारःस्यात् । कुतः,
अचमध्येमकारस्यपाठात् । अत उरणरपर इति सूत्रेरलपर इति
व्याख्यानं कर्त्तव्यमेव ॥ १ ॥ ननु रलयोरितिन्युनं टकारस्य-
मध्यगतत्वेन रढूलानामित्युचितमत आह प्रत्याहारे ष्विति । प्र-
त्याह्रियन्तेऽनेकेवर्णाः सङ्क्षिप्यन्ते यत्रेति वाहुलकादधिकरणेघञ् ।
तत्र मानमाह । अनुनासिक इत्यादि इति । अत्रककारेपर इका-
रस्य इकोयणचीत्यनेनयकारो नदृष्टस्तस्माज्ज्ञायत्ते प्रत्याहारे-
ऽनुन्नानां ग्रहणं न । न चात्र नासाशब्दात्क प्रत्यपेक्षेण इति
ह्रस्वेकृते प्रत्ययस्थादित्यने नइत्वेकृते इत्वविधानसामर्थ्या त्यणादे-

क्षोन भवति इति वाच्यम् ॥ साक्षात्शास्त्रस्येकोयणचि इत्यस्यैवबाध-
ककल्पनापेक्षया आदिरन्त्येनेति संज्ञासूत्रस्यैवबाधक कल्पनमुचि-
तम् । इति न्यायेन इकारोच्चारणसामर्थ्यात् प्रत्याहारेऽनुबन्धानां
ग्रहणं न मित्येव कल्पनोचितत्वात् नच अनुनासिक इत्य-
त्रयण प्राप्तिरेवन कुतस्तत्रेकोसवर्णेशाकल्यस्येतिसूत्रेण प्रकृति-
भावात् । पुनः कथ मनुनासिक इति प्रमाणमितिवाच्यम् । ककार-
स्या च त्वेनयचिभमित्यनेनभत्वे न चपदात्वाऽभावात् । नच भ-
त्वेकृतेयस्येति चेति लोपस्स्यादितिवाच्यम् । लोपंबाधित्वाके-
ण इति ह्रस्वेकृते । पुनः लक्ष्येलक्षणमितिन्यायेन लोपो न स्या-
दितिस्वीकारात् ॥ आदिपदेन एकपूर्व परयोः । राङः पदान्ता-
दतीत्यादिग्राह्यम् । अथ वा अपरेककारेऽचूकार्य्यं न दृश्यते ।
दीर्घ इति भावः । प्रत्याहारेष्वित्ति बहुवचनं आम्राश्वपृष्टाविदा-
रान् आचष्टे इति न्यायेन बोध्यम् ॥ ननु प्रत्याहारेऽनुबन्धानां
कथमज् ग्रहणेषुनेति भाष्योक्तवार्तिके प्रत्याहारशब्दस्य क्ष-
रसमाम्नाये प्रसिद्धेः प्रत्याहारेष्वितामित्यनुपपन्नमत आह आदि-
रन्त्येनेति ॥ १ ॥ ऊकालोऽजिति । उश्चऊश्चऊश्चवस्तेषां वां ॥
वाङ्काल इति ऊकाल ऊकाल इव कालोयस्यस ऊकालः । ह्र-
स्वश्चदीर्घश्चप्लुत श्चेषांसमाहारह्रस्वदीर्घप्लुत्तः । सौत्रत्वात् पुं-
स्त्वम् । ननु ऊशब्दस्यवर्णवाचकत्वात् ॥ कालशब्दस्य त्रुट्यादि-
बोधकत्वात्कथन्तयोः सामानाधिकरण्यमतः कालपदेन उच्चारणा-
धिकणीभूतकालोलक्ष्येते । तथा चायमर्थः ॥, वामुच्चारणाधिकर-
णीभूतकाल इवोचारणाधिकरणीभूतकालो यस्यसोऽचूक्रमादूह्र-
स्वदीर्घप्लुत्तसंज्ञः स्यात् ॥ कुक्कुटरुक्ते उकारे एकद्वित्रिमा-
त्रत्व प्रसिद्धे रकारादयोनोक्ताः । ऊ इति एकद्वित्रिमात्राणां-
क्रमेण प्रश्लेषनिर्देशोव्याख्यानात् । व्याख्यानं च अतोदीर्घोयञि

इति सूत्रेदीर्घग्रहणम् । यदि प्रथमः द्विमात्रिकन्तदनन्तर मेकमात्रि-
कम् । तदनन्तरंत्रिमात्रिकं तदाद्विमात्रिकस्यह्रस्वसंज्ञात्तस्मादीर्घ
ग्रहणंव्यर्थं स्यात् प्रथमस्त्रिमात्रिकपाठेतु प्लुतप्रगृह्येति प्रकृतिभा-
वस्स्यात्, ननू कालोचह्रस्व इति वाक्ये अणत्वात् सवर्णग्रहणेद्वि-
त्रिमात्रयो रपिह्रस्वसंज्ञायां प्रदाय प्रल्हयेत्यादौह्रस्वस्येति तु क्-
स्यादिति चेन्न, आजित्येवाच् ग्रहणसामर्थ्यात् सदृशोजित्य-
र्थे साहृश्यस्यव्याख्यानात् काल कृतस्यैव ग्रहणमितिसिद्धे अ-
धिकङ्कालग्रहणमुच्चारितसम्बन्धिकाल सदृसकालस्यैव संज्ञा न तु
तेन गृहीतसम्बन्धिकासदृश कालस्यापीत्यर्थेनादोषात् । तदुक्तं भा-
ष्ये यान्नदत्रतपरकरणन्तावदत्र काल ग्रहणम् । नचा जितिवर्ण-
ग्रहणेजाति ग्रहणस्य दुर्वारत्वात् तितउच्छत्रासित्यत्रदीर्घात् पदा-
न्ताद्वेति तुगापत्तिरिति वाच्यम् । ज्ञापकसिद्धत्वेनतस्यासांविस्त्रिक-
त्वात् । अन्तरं गत्वेन ह्रस्वनिमित्तकनित्यतुक् एव प्राप्तेश्च ।
अज् ग्रहणं प्रत्यक्ष्येत्यादौ ह्रस्वस्येति तु गून्याद्वत्यर्थम् । उच्चैरि-
त्यधिकरणशक्ति प्रधानमव्ययम् । अधिकरणत्वञ्चोच्चारणं प्रत्येव ।
उच्चैस्त्वं चकण्ठादीनांसभागत्वेएवसम्भवति । उदात्तत्वादीनां अज्
धर्मतया लोकप्रसिद्धत्वेन हलस्वरप्राप्तौव्यञ्जनस्याविद्यमानवत्वा-
दच् पदोपलब्धिः । सभागेषुकण्ठादिपूर्ध्वभागेनिष्पन्नोजुदात्तसंज्ञः
स्यात् । उच्चैस्त्वं चेहस्थानकृतं ग्राह्यम् न श्रुतिकृतम् श्रुतिकृत प्र-
कर्षस्याव्यवस्थितत्वात् उपांशु प्रयोगेचाव्याप्तेः । उदात्तप्रदेशाः
आद्युदात्तश्च निपाता आद्युदात्ताः उदाहरणं आये इति आयत् इ-
त्यवस्थायां निपाता आद्युदात्ता इत्यनेनाकार उदात्तः । यच्छ-
ब्दस्तुफि षोन्तोदात्तः फिडिति प्राचांसंज्ञा प्रातिपदिकस्येति ।
प्रातिपदिकस्यान्तोदात्तः स्यादित्यर्थः । ततः त्यदादिनाम इति
सूत्रेण अकारेकृतेदकारस्यस्थानेजायमानो योः अकारः सोपि-

स्थानेऽन्तरतम इत्यनेनो दातः । ततः अतोगुणे इति एकादेशेकृते ततः एकादेशे उदात्तेनोदात इत्यनेन दकारस्थानिकोप्यकार-उदातः । ततः परस्यजसः अनुदातौसुपितौ इत्यनेनज सोऽनुदात्तः । तस्य स्थानेजायमानोयः शीभावः सोप्यनुदातः । ततः आद् गुणेकृते ततः एकादेशेउदातेनोदातेति इकार अकारयोः स्थानेजायमानोगुणः सोप्युदातः आये इति उदातस्योदाहरणम् । निचैरिति । निचैरित्यधिकरणशक्ति प्रधानमव्ययम् ॥ शेषं प्राग्वत् । सभागेषुकण्ठादिष्वधोभागेनिष्पन्नोजनुदातसंज्ञः स्यात् अनुदात्त प्रदेशाः अनुदातंपदमेकवर्जम् सुप्यितावनुदाताविल्यादयः । उदाहरणमाह अर्वाङिति अर्वाङिति अभिमुखवाच्यव्युत्पन्नोयंशब्दः ततः फिषोत्तो दातः इत्यनेनवकाराकारउदातेकृते अनुदातपदमे कवर्जमित्यनेन अर्वाङित्याद्यनुदातम् ॥ समाहारः स्वरितः, समाह्रीयतेवर्णायस्मिन् इति समाहारः- अधिकरणेघञ् । ऊच्चैरुदात इत्यतः उदात इति निचैरनुदात इत्यतोनुदातश्चेत्यनुवर्तते एकस्मिन् अचिउदातानुदात्तयोर्धमिणोर्मेलन् विरोधावतौअनु वर्तमानौधर्मपरौऊदात्तत्वानुदातत्वेवर्णधर्मौसमाह्रीयतेयस्मिन् सोच् स्वरितसंज्ञः स्यात् ॥ स्वरित प्रदेषाः उदात्तानुदात्तस्यस्वरित इत्यादिः । तस्यादित ऊदातमर्धह्रस्वम् । तच्छब्देन समाहार स्वरित इत्यतस्वरित इत्यनुवर्त्तते ॥ तस्येति सामानाधिकरण्येन षष्ठ्यन्ततया विपरिणामः । अर्धशब्दोऽत्रार्धमात्रापरो बोध्यः । अत एव मात्रजूलोपोऽत्रदृष्टव्य इति भाष्यंसङ्गच्छते । स्वशास्त्रसङ्केतित रूपे णार्थबोधकत्वेनार्द्ध मात्रारूपार्थ बोधकत्वम् । अर्धह्रस्वत्वम् ॥ आदिरेवादितः प्रथमान्तात्तसि । तस्यस्वरितस्यादिरर्धमात्रारूपमुदात्तं बोध्यम् । ऊत्तरं परिशेष मनुदातम् ॥ इत आरभ्यनवसूत्र्यास्त्रि पाद्यामपि प्रवृत्तिः ॥ नोदात्तः

स्वरितोदयमि त्यतः प्राग्भाष्यका रेणतस्याः पाठस्योक्तत्वात् ॥ अत एव उदातादनुदातस्य स्वरित इति सूत्रंनवसूत्री हृ-ष्व्यानासिद्धम् ॥ तस्य चोदात स्वरितेति । ऊदात स्वरितपरौ-यस्मात् तत् ऊदात स्वरितपरम् तस्यभावउदात स्वरितपरत्वम् त-स्मिन् ऊदात्त स्वरितपरत्वेसतिनाम उदातः स्वरितोवा परश्चेत् पूर्वस्य स्वरितस्ययदुतरार्धम् अनुदातम् तस्यश्रवणंस्य ष्टमित्यर्थः ॥ अन्यत्रेति । उदात स्वरितपरत्वाभावेतु उदात श्रवणमित्यर्थः ॥ प्रातिशाख्येति । वेदभाष्ये प्रसिद्धमित्यर्थः ॥ तथा च दर्शयति उदातपरत्वे ह्रस्वस्वरितोदाहरणमाह । क्वेति । कि मोत् सप्तम्य-न्तात् किमोत् स्याद्वा । क्वाति । किमः क्वादेशः स्यादतिपरे । क्वा-देशेकृते अतोगुणइतिपररूपम् । ततः तित् स्वरिमित्यनेनक्वेत्यस्य-स्वरितत्वम् । वस् इति वहुवचनस्येति वसादेशेकृते अनुदातं स-र्वमपादादावित्यनेन वकारेकारोनुदातः । अश्वा इति अशधातोः अशूप्रूषिलटिकणीति उणादिसूत्रेणकन् ञ्निनित्यादेनित्यामित्यने-नाशधातोरकारउदातः । ततोवसादेशस्य सस्य ससजुषोरुरित्यने-नरुत्वेकृते अतोरोरित्यनेन उत्वेकृते आदगुणेति गुणेकृतेराङः पदान्तादित्येकादेशे एकादेशउदा तेनोदात इत्यनेनवकारोत्तर-वर्त्ती ओकारउदातः ॥ दीर्घस्वरितोदा हरणमाह रथानां नयेरा-इति यत् शब्दात् जस्त्यदादीनाम इत्यकारेकृते अतोगुणे इति प-ररूपम् ॥ ततः जसः शीति शीभावेशकारस्येत् संज्ञालोपः आद्-गुणे फिषोन्तोदात इत्यनेन यच्छब्दाकारउदातः । जसः सुप्त्वात् अनुदातम् । एकादेशेकृते एकादशेति सोप्युदातः अरा इति । अरशब्दात् जसिजकारस्येत् संज्ञा ततः दीर्घेकृतेफिषोन्तो इत्य-नेन अरशब्दोन्तोदात्तः । जसः सुप्त्वात् अनुदातत्वम् एकादे-शेसोप्युदातः ततः एङः पदान्तेति पूर्वरूपम् । ततः स्वरितोवा-

नुदाते पदादौ इत्येकारस्स्वरितः । स्वरितपरत्वेउदा हरणमाहश-
तचक्रंयोह्य इति । यत् शब्दफिट्सूत्रेणान्तोदातः । ततः सुविभ-
क्तिः ससजुषोरितिरूत्वे अतोरोरितिउत्वे आद्गुणे इति गुणे-
यो इति ओकारएकादेशे इत्यनेनउदातः, अह्य इति अह्न्या-
प्तावस्मात् ऋहलोरिति ण्यत् तित् स्वरितमित्यनेनस्वरितम् वृ-
द्ध्यऽभावस्तुसंज्ञा पूर्वकोविधिरानित्यः ततः एङः पदान्तेति पूर्व-
रूपम् ततः स्वरितोवानुदातेपदादौ इत्यनेन ओकारः स्वरितः अ-
ग्नीमीलेति अग्निशब्दात् अम् अमीति पूर्वरूपम् फिट् सूत्रेणान्तो-
दात्तत्वम् । अम् सुप्तत्वादनुदातम् । एकादेशेति उदात इले इति
तु तिङतिङः अनेननिघातः । ततः उदातादनुदातस्यस्वरितः इ-
त्यनेनइकारः स्वरितः ततः स्वरितात् संहित्तायामनुदात्ता-
नाम् इत्यनेन प्रचयापरपर्या याएकश्रुतिः ॥ मुखनासिकाव
च नोनुनासिकः मुखेन सहितानासिका मुखनासिकाउच्यते
असौ इति वचनः मुखनासिकया, वचन मुखनासिकावचनः ।
इत्यभिप्रेत्याह मुखसाहितेति सूत्रेमध्यपदलोपि समासो बोध्यः ।
वृत्तौस्पष्टप्रतिपत्तये मध्यमपदलोपो न कृतः समासश्च इति दि-
क्षितः नव्यास्तु मुखं प्राप्य अनुपश्चात् नासिकां प्राप्तः इत्यनुना-
सिक इत्यन्वर्थसंज्ञाभिज्ञानात् नास्य प्रयोजनमित्याहुः । भाष्येतु
मुखंचनासिका च मुखनासिकम् प्राण्यं गत्वादेकवद्भावः उच्यतेऽ
नेनेतिवचम् ईषद्वचनमावचनम् मुखनासिकावचनंयस्य समुखना-
सिकावचनोवर्णो नुनासिकः संज्ञः स्यात् । अन्या अननुनासिक
इति फलितः । मुखग्रहणं किं यमानुस्वाराणामेवानुनासिकसंज्ञा
यथा स्यात् । नासिकाकिम् । शक्ते इत्यादौ अनुदातोपशेति कलो-
पोमाभूत् । तुल्यास्य प्रयत्नमिति । अस्यन्तिवर्णा अनेन आस्यन्दत
इति वा आस्यम् । आस्येभवमास्यम् प्रकृष्टोयत्नप्रयत्न आस्यं च प्रय-

त्नश्च अनयोः समाहारः आस्यप्रयत्नम् तुल्ययामामितं तुल्यं तुल्यमास्य प्रयत्नमस्य तत्तुल्यास्य प्रयत्नं समानं वर्णसवर्णम् जनकत्वं षष्ठ्यर्थः ॥ तथा चाहताल्वादिस्थानेति । नव्यास्तु यस्य वर्णस्य जनकं कठादिस्थानमाभ्यन्तरप्रयत्नश्चेत्ये तद्वयं यस्य वर्णस्य जनकेनकण्ठादिस्थानमाभ्यन्तर प्रयत्नेन तुल्यं भवति तव् वर्णमिथः स वर्णसंज्ञःस्याव् । आस्य किम् तप्ता अत्र झरोझरीतिलोपोमाभूव् । प्रयत्नः किम् वाक्श्चोतति इत्यत्रझरोझरीति शकारस्य लोपोमाभूव् ॥ प्रग्रहणंवाह्यप्रयत्नानिरासर्थम् ॥ ननु स्पृष्ठादिभिः प्रयत्नादिभिरेवशकलवर्णानां व्याप्तत्वाव् संवृतेन क्वभाव्यमत आह ह्रस्वस्यावर्णस्य प्रयोगेति । एवं तर्हि दण्डानयनमित्यादौ ह्रस्वस्य संवृत्तस्यानेनविवृतेनदीर्घोकारेण प्रयत्नभेदाव् सवर्णदीर्घोन स्यादत आह प्रक्रियेति । साधनावस्थायामित्यर्थः विवृतमेवेति । विवृतत्वं प्रप्रतिज्ञेयमित्यर्थः । एवं चोक्त प्रयोगेसवर्णदीर्घसिद्धमिति भावः । ह्रस्वस्याप्रयोगेसंवृत्तत्वे सूत्रं प्रमाणयति अ अ इति । लुप्तषष्ठीकं पदम् विवृत्तस्य स्थाने संवृतआदेशस्यादित्यर्थः । सुपांसुरितिविभक्त्योर्लुक् । प्रथमाकारोविवृतः द्वितीयाकारः संवृतः अत एव अकः सवणे इतिदीर्घोन । विवृतमनूद्येति । विवृतस्य स्थाने इत्यर्थः । पूर्वत्रासिद्धम् । पूर्वशब्दस्य संबंधिशब्दत्वाव् परशब्दाध्याहारः । एवं च पूर्वस्मिन् कर्तव्येपरमसिद्धं स्यादितिमन्यते तदाइकोयणचीतिसूत्र दृष्ट्या अकः सवर्णेति असिद्धं स्याव् तथा च हरिइह इत्यत्राकः सवर्णे इति अस्यासिद्धत्वाव् इकोयणचीत्यनेनयण्स्याव् । इति चेन्न कुतः विप्रतिषेधेपरमितिसूत्रारम्भसामर्थ्याव् पूर्वशब्देन एतच्छास्त्रावधिकाष्टा ध्यायीस्थपूर्वसूत्राणि गृह्यन्ते । एवं च मतः पूर्वस्मिन् कर्तव्येमतः परमसिद्धम् स्याव् नतुसपादसप्ता ध्यायीस्थपठितसूत्रेषु पूर्वप्रतिपरमसिद्धमिति भावः ॥ एवं च सपादसप्तायीं प्र-

तित्रिपाद्यसिद्धा इति फलितम् । अत एव नमुने इति चरितार्थम् । अधिकारश्चायं योगः । तेन त्रिपाद्यांप्रति पूर्वस्मिन् कर्तव्ये परमसिद्धम् । तेन त्रिपाद्यामपीति सिद्धम् ॥ अत एव धुटिश्चुत्वं-सिद्धमिति संगच्छते ॥ यत्तु अधिकारोयं योगः यत्र सूत्रे इदम-नुवर्तते तत् सूत्रावधिकाष्टाध्यायीस्थपूर्वसूत्राणि पूर्वशब्देन गृह्यन्ते एवं च क्वचित् सपादसप्ताध्यायीं प्रतित्रिपादिस्थसूत्रम सिद्धम् । क्वचिच्चतत् सहितां सपादसप्ताध्यायीं प्रतितदसिद्धमिति तन्न । पूर्वत्रासिद्धमित्येतत् शास्त्रं प्रतित्रिपाद्यसिद्धत्वेन अनुवृत्त्यास-म्भवात् । ममतु एतच्छास्त्रातिरिक्तसपादसप्ताध्यायीं प्रतित्रिपा-दिशास्त्रमसिद्धेत्वेत् शास्त्रं प्रतीति नदोषः । शास्त्रातिदेशोयम् । अमू इत्यादिसिद्धये । आमंत्रितं पूर्वमविद्यमानवत् इति सूत्रात् अ-विद्यमानवदिति नानुवर्तते । विभाषासंश्लिष्टत्वात् । अतएवासि-द्धमितिचरितार्थम् ॥ इति स्थानप्रत्नेति । स्थानोत्तरं प्रयत्नविवेक इत्यर्थः । ऋलृवर्णणोरीति । भिन्नस्थानिकयोरित्यर्थः । नाज्झलावि-लि । अत्रदीर्घाकारप्लुतयोः प्रश्लेषोबोध्यः । आश्च आश्च औ-आभ्यां सहितोऽच् आच् आचहल् च आज्झलौ नेति पृथक् त-त्रमानं वक्ष्यामोवयम् । आभ्यां सहितोच् आच् सचहल्च् इत्येतौ-मिथः सवर्णोनस्तः । यणादिकामिति । शीतलशब्देपरे अकः सवर्णे इति दीर्घोनेति भावः । अन्यथेति । नाज्झलावित्यस्या-नारम्भे इत्यर्थः अच्त्वमितिः अच्पद बोध्यत्वंस्यादित्यर्थः ॥ त-था हीति हियस्मात् तथा नामन्तत् सवर्णग्राहकसूत्रमाह । अणु-दितेतिं । प्रत्ययंवर्जयित्वा इति नार्थः इडादावतिव्याप्तेः ॥ किं तु प्रतीयत इति, अविधियमान इत्यस्यउदिति न सम्बन्धः कुहोश्चुरिति ज्ञापकात् । सवर्णस्येति बोधकापेक्षयाषष्ठी । तथा च अविधीय-मानोणउदिच्च सवर्णस्य सं ज्ञानामबोधकः स्यात् । अणग्रहणेषु

संदेहः स्यात् किं पूर्वेणाहोस्वित्परेणेति सर्वत्र संदेहः प्राप्तरित्यत आह अत्राणपरेणेति अत्र मानमाह उपसर्गादृतीति सूत्रेतपरकरणम् । कुतः रिथातौरिति पाठेपि प्रार्च्छति इत्यादिसिध्यति । तपरकरणं व्यर्थं सत् ज्ञापयति । अत्राणपरेणेति । नचूवासुप्या इति सूत्रे ऋति इत्यस्यानुवृत्तिस्तत्रतपरकरणात् उपऋकारीयति इति दीर्घप्रयोगेन प्राप्तः एतदर्थम् तपरकरणमिति वाच्यम् । अणुदित् सवर्णस्येति सूत्रे अणग्रहणस्यानिश्चयात् कथं हृस्वऋकारेणदीर्घऋकारस्य ग्रहणमिति मन्तव्यत्वात् । अतः उपसर्गादिति सूत्रेतपरकरणमानमिति कश्चिदुक्तंतन्न कुतः वासुप्यापिशले इति सूत्रे ऋति इत्यस्यानुवृत्तिः तत्र ऋकारग्रहणेन तपरस्तत् कालस्येति सूत्रेणलृकारस्यापिग्रहणं तेन उपलृकारीयति इति सिद्धम् तपरकरणाऽभावेतु तत्र वृद्धिर्नस्यादित्युभ्युपगमात् । न च ऋत उदिति सूत्रेतपरकरणमानमिति वाच्यम् । त्तपरस्तत्कालस्येति सूत्रेण सवर्णग्राहकत्वेन लृकारस्यग्रहणात् गमुलृ इत्यादिसिध्यर्थं तस्यावश्यकत्वात् इति सर्वंतिरस्कृत्यवयमितिब्रूमस्तत्रउर्ऋदिति सूत्रे तपरकरणंतद्धितपरकरणम् हृस्वऋकारेणदीर्घऋकारस्यव्यावृत्त्यर्थम् । यदि अणग्रहणं पूर्वेणणकारेणतदाहृस्वऋकारेणदीर्घऋकारस्य ग्रहणासंभवात् तपरकरणं व्यर्थं सत् बोधयति इति । न चाणग्रहणं परेणणकारेणेति स्वीकारेपि तपरकरणं व्यर्थंभाव्यमानेन सवर्णानां ग्रहणन्नेत्युक्तेरिति वाच्यम् । विरूपादेशेभाव्यमानत्वाभावात् । अन्यत्रसर्वत्राणग्रहणं पूर्वेणणकारेण बोध्यम् । अत्रतुपरेणेति । ननुएकारऐकारयोः कंठतालुस्थानविवृतश्चप्रयत्नस्तथा ओकार औकारयोः कंठोष्ठस्थानं विवृत्तश्चप्रयत्न इति तुल्यास्येति सूत्रेण परस्पर सावर्ण्यं स्यादत आह सामर्थ्यादिति । तेन ग्लावामित्यादिसिद्धमिति भावः । सति सावर्ण्येतु औकारेण ओकारग्रहणा दात्वदुवारमे-

वेति भावः ॥ नचस्त्रसत्त्वबोधानाय तदारम्भो ऽन्यथा त्तयोरसत्त्वं स्यादिति ऋलक्सूत्रेभाष्येव्यक्तेयंरीतिरिति वाच्यम् । सतितयोः सावर्ण्ये, अकारेणानुप दिष्टदीर्घादीनामिवैङोपि तदुपदेशसम्भवा-त् । नचऐ औजितिसूत्राभावेवृद्धिरादैच् इत्यत्रऐच्पदे न कस्य-ग्रहणं स्यादि तिवाच्यम् । तत्र वृद्धिरादेङ् इत्यस्यपठनीयत्वात् । नच् वृद्धिरादेङ् इत्युक्ते एकार ओकारयोरपि वृद्धिसंज्ञः स्यादितिवाच्यम् । त्वमतेपि एकार ऐकारयोः ओकार औका-रयोर्मिथः सावर्ण्ये, च तुर्णां ग्रहणस्य दुर्वारत्वात्, यत्रोभयोः समो-दोषः तत्र प्रति हारोपि तत् समः, न चैकस्तत्र प्रयोक्तव्यस्तादृग-र्थविचारणरित्युक्तेरेतत् स्थलस्यवादि प्रतिवादिनोस्त्याजत्वात्, नचऐ औजिति सूत्राभावे एचोयवायाव इत्यादौ निर्वाहोनस्या-दितिवाच्यम् । तत्रै ङोयवेतिपठनीयत्वात् । न च एचोयवायावे ति सूत्रे, चतुर्णांस्थानीनां आदेशानां च सत्वात्, यथा संख्येन-निर्वाहो भवति, इदानीं, च तु र्णांस्थानीनामसत्वात् यथा संख्यं-नस्यादिति वाच्यम् । स्थानेऽन्तरतम इति सूत्रेण निर्वाहात् । न च स्थानैक्यात् प्रयत्नैक्याच्चएकारस्यस्थाने आयादेशः, ओकारस्य-स्थाने आवादेशः स्यादिति वाच्यम् । संवृत्तावर्णस्यसंवृत्तावर्णः । विवृत्तावर्णस्यविवृत्तावर्ण इति, उक्तेः । एकार ओकारयोः संवृत्ता-वर्णसत्वात् तयोः अय् अवादेशयोः प्राप्तयोः संवृत्तयोः । ऐकार औकारयोर्विवृतावर्णत्वेनतयोः आयावादेशयोर्विवृतयोर्भवितव्य-त्वाच्च । न च ऐ औजितिसूत्राभावेनयूवेति सूत्रेऐच् पदेनकस्य ग्रहणम् स्यादिति वाच्यम् । तत्रऐ औरितिस्वरूपेणपठनीयत्वात् एवं च ऐ औजितिसूत्रारम्भ सामर्थ्यादिति न युक्तम्, कुतः ऐऔअनयोः नयूवेति सूत्रेऽवश्यं पठनीयत्वात् किं तु ऐ औजिति-सूत्रघटित च कारानुबधकरणसामर्थ्यान्न । नाज्झलौ । नचाकार

हकारयोःस्थानप्रयत्नैक्यात् सवर्णसंज्ञायामणुदित् सूत्रेणहकारग्रहणेविश्वपाभि रित्यत्राकारस्य ढत्वं स्यादिति चेन्नैवम् नाज्झलाविति सूत्रेण आकारहकारयोः सावर्ण्यनिषेधात् । न च आकार प्रश्लेषे किं प्रमाणमिति वाच्यम् । कालसमयवेलासु तु मुन्, इति निर्देशस्यमानत्वात् । यदि अत्र आकारो न प्रश्लिष्यतेतदाहकारस्येण प्रत्याहारान्तर्गतत्वात् आकारस्यापि इणत्वात् षत्वं स्यात् अतो ज्ञायते आकार प्रश्लेषोस्ति । न चैवमपि प्लुताऽऽकारस्य हकारेणसह सावर्ण्यात् हे,यिया ३सो,हे पिपा ३सो इत्यादौषत्वम् स्यादिति वाच्यम् । तत्र प्लुताऽऽकारस्यापि प्रश्लिष्टत्वात्, प्लुताकार प्रश्लेषमानंतु ईषद् विवृत्तमूष्मणांविवृत्तं स्वराणामिति प्रयत्नभेदेनना ज्झलावित्येतत् प्रत्याख्यान भाष्यमेव । सूत्राभावे प्रयत्नभेदात् सावर्ण्यं न प्राप्नोति इति फलभेदे प्रत्याख्यानमसङ्गतम् ॥ अतः, आरम्भ प्रत्याख्यानयोः फलैक्यायसूत्रेप्लु ताकारोपि प्रश्लिष्यते । नचैवन्दध्यानय इत्यादौ आकारस्याच्त्वाभावात् इकोयणचीतिसूत्रमपि न प्रवर्तत इति वाच्यम् ॥ वर्णानां अइ उण् इत्यादीनां उपदेशस्तावत् तदुत्तरंहलंत्यमिति सूत्रेण इत् संज्ञातदनन्तरं आदिरंत्येनेति सूत्रेण प्रत्याहारसंज्ञातदुत्तरकालं, तुल्यास्य प्रयत्नमिति शास्त्रेणसवर्णसंज्ञा, तदुत्तरं अणुदित् सूत्रेण ग्राहकता इति एते न सर्वेणसमुदितेनवाक्येन अन्यत्रसवर्णानां ग्रहणम्भवति, न चात्रेकारः शकार गृह्णातिना ज्झलाविति सूत्रभाष्योक्तवाक्यपरिसमाप्तिन्यायात् । पञ्चमहावाक्यान्तर्गत इकोयणचीत्यादिषुदीर्घस्यापि ग्रहणात् दध्यानय इत्यादौयणादिकम्भवत्येव । नचनाज्झलावित्यस्य पञ्चमहा वाक्यान्तर्गतत्वाभावात् कथं तेनवर्णसमाम्नाय पठितानां निषेध इति वाच्यम् । अपवादविषयं प्रकल्प्यतत उत् सर्गोभिनिविशते इति परिभाषयातुल्पास्य प्रयत्नमिति सूत्र-

स्यवाक्यार्थं बोधात् प्रागनाङ्झलावित्यस्य वाक्यार्थं बोधात् । अन्यथा, बाधकसम्भावनया तुल्यास्य सूत्रजशक्तिग्रहेऽप्रामाण्यसन्देहेन, अणुदित् शास्त्रजबोधानापत्तिः । नचविश्वपाभिरि सत्रढत्वसंयोगान्तलोपप्राप्तौढत्वस्या सिद्धत्वात् संयोगान्तलोप एव स्यादिति वाच्यम् । हकारेण आकारग्रहणेसतियद् अत्र प्राप्नोतितस्य सर्वस्योपलक्षणत्वात् १। तेनानुनासिकेति । तेननाम अणुदित् सूत्रे अणपरेणैवेतिस्वीकारेण, तेअननुनासिकायत्रल्लाद्वयोर्द्वयोः संज्ञानामबोधकाः, तपरस्तत् कालस्येति—अतोभिसिसितिसूत्रे तपरकरणात् सहिवहोरिति सूत्रेवर्णग्रह णाच्च तपरस्तपर इत्यस्यावर्त्तते,तःपरोयस्मात् सच् तात् परशब्दबोध्योयोवर्णः सचोच्चार्यमाणः स्वसवणसमकालस्य बोधकः स्यात् । अणुदित् सवर्णस्येत्यस्यापवादोयम् । निर्वकाशत्वात् । तात् परशब्दबोध्योयोवर्ण इत्ययमर्थोवृद्धिरादैजिति सूत्रस्थभाष्यसंमतः ॥ तत्रहित परकरणमुत्तरार्थमैजर्थम्, इत्युक्तम् । अणुदित् सवर्णस्येत्यतोसवर्णस्येत्यनुवर्तते स इति तपरवर्णोच्चाराणाधिकरणी भूतकालइवोच्चारणाधिकरणी भूतकालोयस्य स तत्काल, स्तस्य । वृद्धिरादैच्, त्रिपदं सूत्रम् भत्वात् कुत्वाभावः ॥ अदेङ्गुणः त्रिपदमिदं सूत्रम् । भूवाद्योधातवः । भूश्चवाश्चभुवौ इति द्वन्द्वः ॥ आदिश्च आदिश्च आदीव्यवस्थाप्रकारवाचिनोरेकशेषः ॥ भूआदिर्येषां तेभुवादयः । भूप्रभृतयोवासदृशाये शब्दस्वरूपास्तेधातवः स्युः । सादृश्यं च क्रियावाचकत्वेन इत्यत आह क्रियावाचि इति । क्रियावाचिनेति किम् । याः पश्यसिं इत्यादौधातुत्वंमाभूत् सतिहित्तस्मिन् आतोधातोरिति आकारलोपः स्यात् आतोनाप इति वार्तिकमते तु नात्रप्राप्तिः । किं तु विकल्पार्थकवा शब्दस्य धातुत्वेप्रातिपादिकत्वाभावात् सुबभावे पदत्वानापत्तिर्दोषः ॥ प्राग्रीस्व-

शादितिरकारोच्चारणं स्पष्टप्रतिपत्त्यर्थम् रीश्वरपदघटितसूत्रमभि-
व्याप्य इदं पदद्वयमधिक्रियते। चादयइति। च आदिर्येषान्ते चा-
दयः। न सत्वमसत्वं तस्मिन् असत्वे सत्वं द्रव्यं, अद्रव्येवर्तमाना-
श्चादयनिपाताः स्युः निपातसंज्ञाप्रदेशानिपात एकाजनाङित्या-
दयः। प्रादयः, चादयोसत्वे इति सूत्राद् असत्वे इति वर्तते। अ-
सत्वेवर्तमानाः प्रादयस्तथा,उपसर्गारिति। प्रादय इति वर्तते। क्रिया-
योगः क्रियोगस्तस्मिन् क्रियायोगेप्रादयः क्रियायोगे प्राङ्निपातसं-
ज्ञासन्तः पश्चात् उपसर्गसंज्ञाः स्युः, प्रादिनांतिस्रसंज्ञाः प्रदेशास्ता-
सांस्वरादिनिपातम व्ययम्, उपसर्गाद समासे गत्तिर्गतावित्यादयः।
तेनपर्याणधामित्यादौ विभक्तिप्लुकूणत्वनिघाताः सिद्धाः। नवेति
इति॥ लोकेशब्दा अर्थ पराशास्त्रे शब्दाशब्दपराः इत्याशङ्क्याह—अ-
र्थविपर्यासकृत्, तेननिषेधोविकल्पश्चवाशब्दार्थ संज्ञीविभाषाशब्दा-
र्थोविकल्पसंज्ञाअस्यप्रदेशाविभाषाश्वे इत्यादौ। स्वंरूपमिति। श-
ब्दस्यार्थविशिष्टस्यरूपं वोध्यम्। अर्थविशिष्टरूपस्य शब्दोवोधकः।
शब्दशास्त्रेयासंज्ञासातुनतेन अर्थवत् परिभाषासिद्धा। विरामेति।
तदुच्चारणोत्तरं वर्णान्तरं नोच्चार्यते सोऽन्त्यवर्णोवसानसंज्ञः स्यात्।
परः संनि इति। परशब्दोत्रातिशयः परः तेन स्वभावसिद्धार्धमात्राति-
रिक्तकालव्यवाया भावः। हलोऽनन्तरेति॥ विजातीयस्वरैः अव्यव-
हिताः हलः संयोगसंज्ञाः स्युः। प्रथमाध्याय स्थानं संधिकार्यो प-
योगीनां संज्ञाप्रकरणं इति नामप्रमाप्तमित्यर्थः॥१।४।६।७।८।९।१०॥

इकोगुणवृद्धीति इक इति षष्ठ्यन्ताऽनुकरणम् तेनाऽत्वसं-
त्तस्येति दीर्घोन, पूर्वसूत्राद् गुणवृद्धिपदमनुवृत्य तृतीयान्तत्वे-
नविपरिणामः, तेनगुणवृद्धीशब्दाभ्यां यत्र शास्त्रे गुणवृद्धीविधयता-
प्रयोजकेपदे वर्तेते तत्र इक इति षष्ठ्यन्तम्पदमुपतिष्ठते तेनत्यदादि-
नामः इयम् दिवऔत् द्यौः इति सिद्धम् यत्र पदं लाक्षणिकम्॥ तेन

भवति इत्यादौ न दोषः प्रदेशाः सार्वधाकइत्यादयः ॥ अचश्चेति ॥ अचः इति षष्ठ्यन्तानुकरणम्, ऊकाल इति सूत्राद् ह्रस्वादिपदमनुवर्तते तृतीयान्तत्वेन विपरिणामः । एवं च ह्रस्वदीर्घप्लुतशब्दैर्यत्राज् विधेयता प्रयोजकं पदमनुवर्तते तत्रा च इति षष्ठ्यान्तपदमुपतिष्ठते प्रदेशाः ह्रस्वोनसमामष्टा दूराद्धुते इत्यादयः॥अद्यन्ताविति। सौत्रत्वात्समासः, यस्य समुदायस्यठिव कितौ विहितौ तस्य समुदायस्याद्यावयवटित्स्यादन्तावयवकित्स्यात, षष्ठीस्थाने इतस्यापवादः, परिभाषा प्रदेशाः आर्धधातुकस्येत्यादिः कित्प्रदेशाः शितुक् इत्यादयः॥ मिदचोन्त्यापरः, अच इति निर्धारणेषष्ठी सौत्रत्वादेकवचनम्, अचांमध्येयोन्त्यस्तस्मात्परः मित्स्यात् यस्य समुदायस्य मिद्विहित्तस्यैवान्तावयवस्यात, परिभाषा प्रदेशाः न पुस्कस्येत्यादिः ॥ षष्ठीति ॥ स्थानेनयोगोऽस्येति स्थानेयोगान निर्धारितसम्बन्धविशेषोऽवयवाऽवयवी भावः संबन्ध विशेषोयस्या सा अनिर्धारित सम्बन्धविशेषा, सा षष्ठीस्थानपदार्थनिरुपित सम्बन्धार्थिकाबोध्या ॥ परिभाषाप्रदेशाः इकोयणचि इत्यादयः ॥ सिद्धेशब्दार्थसम्बन्धे, इति भाष्यादाहस्थानं चेति दर्भाणां स्थानेत्यर्थः ॥ स्थानेऽन्तरतमेति प्राप्यमाणानां आदेशानां प्रसंगेसति अतिशयेन शदृशतम आदेशः स्यात, परिभाषा प्रदेशाः इकोयणचि इत्यादयः ॥ षष्ठीस्थाने योगा । इति सूत्रात्स्थान ग्रहणस्यानुवृत्ति पुनः स्थानग्रहणं ज्ञापयति यत्रानेकेति । आन्तर्यनाम शादृश्यमित्यर्थः । तमप ग्रहणं ज्ञापयति, चतुर्विद्यमान्तर्य्यम् स्थानार्थ गुणप्रमाणकृत मित्यर्थः । यथा क्रमेण उदाहरणम् । दध्यत्र । क्रोष्टुशब्दस्यस्थाने क्रोष्टृ आदेशः । वाग्घरिः । अमुम् ॥ तस्मिन्निति तदशब्द औपश्लेष सप्तम्यन्तानुकरणम् ङिविभक्तिस्तु निर्दे इत्यस्य समानाधिकरणाय । औपश्लेषिक सप्तम्यन्त पदबोध्यार्थे अव्यवहितो-

च्चारिते सति पूर्वस्यकार्य्यं बोध्यम् । पूर्वस्य परस्य च कार्य्ये प्राप्ते पूर्वस्यैवेतिनियमः । व्यवहिते अव्यवहिते च प्राप्तेऽव्यवहितस्यैव इति ॥ तस्मादिति, दिग्योगलक्षण पञ्चम्यन्तानुकरणम् । दिग्योगलक्षणपद बोध्यर्थात् अव्रहितोच्चारिताव परस्यरकार्य्यं बोध्यम् । अलोऽन्त्यस्येति । षष्ठ्यन्तस्य यत्कार्य्यमुच्यते तत्कार्य्यं अन्तस्य भवति ॥ सर्वस्येति । लाघवादिति भावः । आदे परस्येति । परशब्दमुच्चार्य्य परस्योच्यमानं कार्य्यं, आदेरलस्थाने बोध्यमित्यर्थः । स्वरितेनेति । स्वरितदृष्टे ऽधिकारो न, स्वरिते इति सप्तम्यन्तम् ।

॥ इति परिभाषाप्रकरणम् ॥



एतेषां विवारश्वास, अघोषाः बोध्याः

| | | |
|---|---|---|
| खय्प्रत्याः | खय्सम्बन्धियमौद्धौ | सर्वे |
| क ख | क ख × क×पौ द्वौ | खय् |
| च छ | च छ विसर्ग एकः | १० |
| ट ठ | ट ठ शषस | यम |
| त थ | त थ त्रयः | २ |
| प फ | | विसर्ग |
| (१०) | | १ |
| बहु परिश्रमेण ना- | मया एषाकारिका सुगमो पायेन | × क×पो |
| न्हूरामेण लिखता | लिखिता सर्वे ज्ञातव्या अन्यदपि | २ |
| कारिका प्रेक्ष | द्वादश्चस्मृता ह्यष्टौ चत्वारश्चयमाः | शर् |
| णीया | स्मृताइतिशिक्षाप्रमाणेनचत्वारएवयमाः | ३ |

अन्येषां सम्वारनाद घोषाः बोध्या | हशोहशांयमा अनुस्वा-रश्च अचामपि

| | | | | |
|---|---|---|---|---|
| हश् | हशसम्वन्धियमोद्धौ | | अच् ९ | सर्वे ३२ |
| ह ञ भ ग | घ ग | अनुस्वारः | अ ऌ | उदात्त अनु |
| य म ञ ङ | झ ज | (१) | इ ए | दातादि अचौ |
| व ङ घ | ढ ड | | उ ऐ | के प्रयत्न जा |
| र ण ढ द | ध द | | ऋ ओ | णना शिक्षा- |
| ट न ध २० | एक द्वितीय | | औ | प्रमाण से |
| ल झ व ज | | | | |

| | | | |
|---|---|---|---|
| अल्पप्राण प्रयत्नलि० | | अन्येषां महाप्राण प्रयत्नम् बोध्यम् | |
| प्रथम तृतीय पंचम | द्वितीयः। चतुर्थः | एषां संबंधियमेद्धे | |
| क ग ङ यर् | ख घ | ख, छ, ठ, थ, एक | |
| च ज ञ य | छ झ | घ, झ, ढ, ध, | |
| ट ड ण व | ठ ढ | द्वितीय, दोयम | |
| त द न | थ ध | | |
| प ब म ल | फ भ | | |
| ं सम्बन्धियम दो | अच् नव। | शर ३ विसर्ग १ | |
| ठ, थ, एकयमः | अ ऋ ओ उ ए ऐ | श, ष, स ३ | |
| ; ध, द्वितीयमः | इ ऌ औ नव | अनुस्वार १ | |
| य यमसंज्ञायाः, | क च ट त | यमचत्वार एव | |
| न लेखनीयाः। | ख छ ठ थ | तेषां स्वरूपं | |
| द० नान्हूराम मोर्ड | ग ज ड द | अत एव वर्गेषु | |
| जि० रोहतक। | घ १ झ २ ढ ३ ध ४ | इति संगच्छते | |

पता— बुलानाला काशी

बावूहनुमानप्रशादकी
पाठशाला

पं० नान्हूरामगोस्वामि गिरिधारिलाल

( जिलारोहतक )

घनश्यामात्मज ।

मोई निवासी पं० नन्दूरामनान्हूराम
मीश्रजी ।

संवत् १९६४ मिति चैत शुक्ल ९

मूल्यम् ॥)